कवच-स्तोत्र

# श्रीबगला त्रैलोक्य-विजय कवचम्



**श्रीबगला त्रैलोक्य-विजय कवचम्**

।। श्री भैरव उवाचः ।।

श्रृणु देवि प्रवक्ष्यामि स्व-रहस्यं च कामदम् ।
श्रुत्वा गोप्यं गुप्ततमं कुरु गुप्तं सुरेश्वरि ।।1।।
कवचं बगलामुख्याः सकलेष्टप्रदं कलौ ।
तत्सर्वस्वं परं गुह्यं गुप्तं च शरजन्मना ।।2।।
त्रैलोक्य-विजयं नाम कवचेशं मनोरमम् ।
मन्त्र-गर्भं ब्रह्ममयं सर्व-विद्या विनायकम् ।।3।।
रहस्यं परमं ज्ञेयं साक्षाद्-मृतरूपकम् ।
ब्रह्मविद्यामयं वर्म सर्व-विद्या विनायकम् ।।4।।
पूर्णमेकोनपञ्चाशद् वर्णैरुक्त महेश्वरि ।
त्वद्भक्त्या वच्मि देवेशि गोपनीयं स्वयोनिवत् ।।5।।

**।। श्री देव्युवाच ।।**



भगवन् करुणासार विश्वनाथ सुरेश्वर ।
कर्मणा मनसा वाचा न वदामि कदाचन् ।।1।।

**।। श्री भैरव उवाच ।।**

त्रैलोक्य विजयाख्यस्य कवचास्यास्य पार्विति ।

मनुगर्भस्य गुप्तस्य ऋषिर्देवाऽस्य भैरवः ॥ 1 ॥
उष्णिक्-छन्दः समाख्यातं देवी श्रीबगलामुखी ।
बीजं ह्लीं ॐ शक्तिः स्यात् स्वाहा कीलकमुच्यते ॥ 2 ॥
विनियोगः समाख्यातः त्रिवर्ग-फल-प्राप्तये ।
देवि त्वं पठ वर्मैतन्मन्त्र-गर्भं सुरेश्वरि ॥ 3 ॥
बिनाध्यानं कुतः सिद्धिः सत्यमेतच्च पार्वति ।
चन्द्रोद्भासितमूर्धजां रिपुरसां मुण्डाक्षमालाकराम् ॥ 4 ॥
बालांसत्स्रकचञ्चलां मधुमदां रक्तां जटाजूटिनीम् ।
शत्रु-स्तम्भन-कारिणीं शशिमुखीं पीताम्बरोद्भासिनीम् ॥ 5 ॥
प्रेतस्थां बगलामुखीं भगवतीं कारुण्यरूपां भजे ।
ॐ ह्लीं मम शिरः पातु देवी श्रीबगलामुखी ॥ 6 ॥
ॐ ऐं क्लीं पातु मे भालं देवी स्तम्भनकारिणी ।
ॐ अं इं हं भ्रुवौ पातु क्लेशहारिणी ॥ 7 ॥
ॐ हं पातु मे नेत्रे नारसिंही शुभंकरी ।
ॐ ह्रीं श्रीं पातु मे गण्डौ अं आं इं भुवनेश्वरी ॥ 8 ॥
ॐ ऐं क्लीं सौः श्रुतौ पातु इं ईं ऊं च परेश्वरी ।
ॐ ह्लीं ह्लूं ह्लीं सदाव्यान्मे नासां ह्लीं सरस्वती ॥ 9 ॥
ॐ ह्रां ह्रीं मे मुखं पातु लीं इं ईं छिन्नमस्तिका ।
ॐ श्री वं मेऽधरौ पातु ओं औं दक्षिणकालिका ॥ 10 ॥
ॐ क्लीं श्रीं शिरसः पातु कं खं गं घं च सारिका ।
ॐ ह्रीं ह्रूं भैरवी पातु ङं अं अः त्रिपुरेश्वरी ॥ 11 ॥
ॐ ऐं सौः मे हनुं पातु चं छं जं च मनोन्मनी ।
ॐ श्रीं श्रीं मे गलं पातु झं ञं टं ठं गणेश्वरी ॥ 12 ॥
ॐ स्कन्धौ मेऽव्याद् डं ढं णं हूं हूं चैव तु तोतला ।
ॐ ह्रीं श्रीं मे भुजौ पातु तं थं दं वर-वर्णिनी ॥ 13 ॥
ऐं क्लीं सौः स्तनौ पातु धं नं पं परमेश्वरी ।
क्रों क्रों मे रक्षयेद् वक्षः फं बं भं भगवासिनी ॥ 14 ॥
ॐ ह्रीं रां पातु कक्षि मे मं यं रं वह्नि-वल्लभा ।
ॐ श्रीं ह्रूं पातु मे पार्श्वौ लं बं लम्बोदर प्रसूः ॥ 15 ॥
ॐ श्रीं ह्रीं ह्रूं पातु मे नाभि शं षं षण्मुख-पालिनी ।
ॐ ऐं सौः पातु मे पृष्ठं सं हं हाटक-रुपिणी ॥ 16 ॥
ॐ क्लीं ऐं कटि पातु पञ्चाशद्-वर्ण-मालिका ।
ॐ ऐं क्लीं पातु मे गुह्यं अं आं कं गुह्यकेश्वरी ॥ 17 ॥
ॐ श्रीं ऊं ॠं सदाव्यान्मे इं ईं खं खां स्वरूपिणी ।

ॐ जूं सः पातु मे जंघे रुं रुं धं अघहारिनी ॥ 18 ॥
श्रीं ह्रीं पातु मे जानू उं ऊं णं गण-वल्लभा ।
ॐ श्रीं सः पातु मे गुल्फौ लिं लीं ऊं चं च चण्डिका ॥ 19 ॥
ॐ ऐं ह्रीं पातु मे वाणी एं ऐं छं जं जगत्प्रिया ।
ॐ श्रीं क्लीं पातु पादौ मे झं ञं टं ठं भगोदरी ॥ 20 ॥
ॐ ह्रीं सर्वं वपुः पातु अं अः त्रिपुर-मालिनी ।
ॐ ह्रीं पूर्वे सदाव्यान्मे झं झां डं ढं शिखामुखी ॥ 21 ॥
ॐ सौः याम्यं सदाव्यान्मे इं ईं णं तं च तारिणी ।
ॐ वारुण्यां च वाराही ऊं थं दं धं च कम्पिला ॥ 22 ॥
ॐ श्रीं मां पातु चैशान्यां पातु ॐ नं जनेश्वरी ।
ॐ श्रीं मां चाग्नेयां ऋं भं मं धं च यौगिनी ॥ 23 ॥
ॐ ऐं मां नैऋत्यां लॄं लां राजेश्वरी तथा ।
ॐ श्रीं पातु वायव्यां लृं लं वीतकेशिनी ।
ॐ प्रभाते च मो पातु लीं लं वागीश्वरी सदा ॥ 24 ॥
ॐ मध्याह्ने च मां पातु ऐं क्षं शंकर-वल्लभा ।
श्रीं ह्रीं क्लीं पातु सायं ऐ आं शाकम्भरी सदा ॥ 25 ॥
ॐ ह्रीं निशादौ मां पातु ॐ सं सागरवासिनी ।
क्लीं निशीथे च मां पातु ॐ हं हरिहरेश्वरी ॥ 26 ॥
क्लीं ब्राह्मे मुहूर्तेऽव्याद लं लां त्रिपुर-सुन्दरी ।
विसर्गा तु यत्स्थानं वर्जित कवचेन तु ॥ 27 ॥
क्लीं तन्मे सकलं पातु अं क्षं ह्लीं बगलामुखी ।
इतीदं कवचं दिव्यं मन्त्राक्षरमय परम् ॥ 28 ॥
त्रैलोक्यविजयं नाम सर्व-वर्ण-मयं स्मृतम् ।
अप्रकाश्यं सदा देवि श्रोतव्यं च वाचिकम् ॥ 29 ॥
दुर्जनायाकुलीनाय दीक्षाहीनाय पार्वति ।
न दातव्यं न दातव्यमित्याज्ञा परमेश्वरी ॥ 30 ॥
दीक्षाकार्य विहीनाय शक्ति-भक्ति विरोधिने ।
कवचस्यास्य पठनात् साधको दीक्षितो भवेत् ॥ 31 ॥
कवचेशमिदं गोप्यं सिद्ध-विद्या-मयं परम् ।
ब्रह्मविद्यामयं गोप्यं यथेष्टफलदं शिवे ॥ 32 ॥
न कस्य कथितं चैतद् त्रैलोक्य विजयेश्वरम् ।
अस्य स्मरण-मात्रेण देवी सद्योवशी भवेत् ॥ 33 ॥
पठनाद् धारणादस्य कवचेशस्य साधकः ।
कलौ विचरते वीरो यथा श्रीबगलामखी ॥ 34 ॥

इदं वर्म स्मरन् मन्त्री संग्रामे प्रविशेद् यदा ।
युयुत्सुः पठन् कवचं साधको विजयी भवेत् ।। 35 ।।
शत्रुं काल-समानं तु जित्वा स्वगृहमेति सः ।
मूर्घ्नि धृत्वा यः कवचं मन्त्र-गर्भं सुसाधकः ।। 36 ।।
ब्रह्माद्यमरान् सर्वान् सहसा वशमानयेत् ।
धृत्वा गले तु कवचं साधकस्य महेश्वरि ।। 37 ।।
वशमायान्ति सहसा रम्भाद्यप्सरसां गणाः ।
उत्पातेषु घोरेषु भयेषु विवधेषु च ।। 38 ।।
रोगेषु च कवचेशं मन्त्रगर्भं पठेन्नरः ।
कर्मणा मनसा वाचा तद्भयं शान्तिमेष्यति ।। 39 ।।
श्रीदेव्या बगलामुख्याः कवचेशं मयोदितम् ।
त्रैलोक्य-विजयं नाम पुत्रपौत्र धनप्रदम् ।। 40 ।।
ऋणं च हस्ते सम्यक् लक्ष्मीर्भोगविवर्धिनी ।
बन्ध्या जनयते कुक्षौ पुत्र-रत्नं न चान्यथा ।। 41 ।।
मृतवत्सा च विभृयात् कवचं च गले सदा ।
दीर्घायुर्व्याधिहीनश्च तत्पुत्रो वर्धतेऽनिशम् ।। 42 ।।
इतीदं बगलामुख्याः कवचेशं सुदुर्लभम् ।
त्रैलोक्य-विजयं नाम न देयं यस्यकस्यचित् ।। 43 ।।
अकुलीनाय मूढाय भक्तिहीनायदम्भिने ।
लोभयुक्ताय देवेशि न दातव्यं कदाचन् ।। 44 ।।
लोभ-दम्भ-विहीनाय कवचेशं प्रदीयताम् ।
अभक्तेभ्यो अपुत्रेभ्यो दत्वा कुष्ठी भवेन्नरः ।। 45 ।।
रवौ रात्रौ च सुस्नातः पूजागृहगतः सुधीः ।
दीपमुज्ज्वाल्य मूलेन पठेद्वर्मेदमुत्तमम् ।। 46 ।।
प्राप्तौ सत्यां त्रिरात्रौ हि राजा तद्-गृहमेष्यति ।
मण्डलेशो महेशानि देवि सत्यं न संशय ।। 47 ।।
इदं तु कवचेशं तु मया प्रोक्त नगात्मजे ।
गोप्यं गुह्यतरं देवि गोपनीयं स्वयोनिवत् ।। 48 ।।

**।। श्री विश्वयामले बगलामुख्यास्त्रैलोक्यविजयं कवचम् ।।**

***Related***